# *हरिद्रा गणेश कवचम्*

ईश्वर उवाच

श्रुणु वक्ष्यामि कवचं सर्वसिद्धिकरं प्रिये ।
पठित्वा पाठयित्वा च मुच्यते सर्व सङ्कटात् ॥ १ ॥

अज्ञात्वा कवचं देवि गणेशस्य मनुं जपेत् ।
सिद्धिर्नजायते तस्य कल्पकोटि शतैरपि ॥ २ ॥

ॐ आमोदश्च शिरः पातु प्रमोदश्च शिखोपरि ।
सम्मोदो भ्रूयुगे पातु भ्रूमध्ये च गणाधिपः ॥ ३ ॥

गणाक्रीडो नेत्रयुगं नासायां गणनायकः ।
गणक्रीडान्वितः पातु वदने सर्वसिद्धये ॥ ४ ॥

जिव्हायां सुमुखः पातु ग्रीवायां दुर्मुखः सदा ।
विघ्नेशो हृदये पातु विघ्ननाथश्च वक्षसि ॥ ५ ॥

गणानां नायकः पातु बाहुयुग्मं सदा मम ।
विघ्नकर्ता च ह्युदरे विघ्नहर्ता च लिङ्गके ॥ ६ ॥

गजवक्त्रः कटीदेशे एकदन्तो नितम्बके ।
लम्बोदरः सदा पातु गुह्यदेशे ममारुणः ॥ ७ ॥

व्याल यज्ञोपवीती मां पातु पादयुगे सदा ।
जापकः सर्वदा पातु जानुजङ्घे गणाधिपः ॥ ८ ॥

हारिद्रः सर्वदा पातु सर्वाङ्गे गणनायकः ।
य इदं प्रपठेन्नित्यं गणेशस्य महेश्वरि ॥ ९ ॥

कवचं सर्वसिद्धाख्यं सर्वविघ्न विनाशनम् ।
सर्वसिद्धिकरं साक्षात् सर्वपाप विमोचनम् ॥ १० ॥

सर्वसम्पत्प्रदं साक्षात् सर्वदुःख विमोक्षणम् ।
सर्व आपत्ति प्रशमनं सर्वशत्रु क्षयङ्करम् ॥ ११ ॥

ग्रहपीडा ज्वरा रोगा ये चान्ये गुह्यकादयः ।
पठनाद् धारणादेव नाशमायन्ति तत्क्षणात् ॥ १२ ॥

धनधान्यकरं देवि कवचं सुरपूजितम् ।
समं नास्ति महेशानि त्रैलोक्ये कवचस्य च ॥ १३ ॥

हारिद्रस्य महादेवि विघ्नराजस्य भूतले ।
किं अन्यैरसदा आलापैः यत्र आयुर्व्यतामियात् ॥ १४ ॥

॥ इति विश्वसार तन्त्रे हरिद्रा गणेश कवचं संपूर्णम् ॥